Published by Shah Kuvarji Anandji, for Jain Dharmaprasarak Sabha, Bhavanagar

Printed by Ramchandra Yesu Shedge, at the Nirnaya-sagar Press, 23, Kolbhat Lane, Bombay

॥ उपदीकरिष्यतेऽयं ग्रन्थो निर्ग्रन्थवर्गेभ्यः कर्मग्रन्थाधिकारिभ्यो
ग्रन्थभाण्डागारेभ्यश्च द्रव्यसाहाय्यकपुण्यार्थम् ॥

# ॥ प्रस्तावना ॥

। श्रीन्यायांभोनिधिश्रीमद्विजयानंदसूरीश्वरांघ्रिवनकजेभ्यो नमः ।

समालोकयन्तु प्रतिभावन्तः सज्जनाः, श्रीमद्भिः जिनवल्लभगणिभिरल्पमेधसां सत्त्वानां कर्मप्रकृतिपंचसंग्रहादिशास्त्ररत्नाकरे प्रवेशकरणायाज्ञानांधकारचित्रभानुश्रीमच्छिवशर्मादिसूरिकृतशतकादिग्रंथाउद्धृत्य, श्राद्धदिनकराद्यनेकग्रंथकारकपूज्यपादश्रीमद्देवेन्द्रसूरिशतकात् प्राक्, सूक्ष्मार्थविचारनामाऽवतरणरूपोऽयं प्रकरणग्रंथो गुंफितः। अस्योपरीयमेकसप्तत्यधिकैकादशशतवर्षे अणहिल्लपुरपत्तने स्थित्वा श्रीमद्धनेश्वरसूरिभिर्वृत्ती रचितास्ति। अस्य ग्रंथस्य उपसंहारात्मकचरमगाथां प्रक्षिप्तां च वर्जयित्वान्यासां सार्धशतकपरिमाणत्वेन सार्धशतकमित्यभिधानं चक्रे।

एतद्ग्रंथकारः कदा जातः? इत्यारेकायामस्मिन् ग्रंथे न कोऽप्युल्लेखो दृश्यते, परमन्यान्यग्रंथानुसारेणैतज्ज्ञायते—नवाङ्गीवृत्तिकारकपूज्याः श्रीमदभयदेवसूरयः स्वविनयविनेयान् श्रीमद्वर्धमानसूरिणः स्वपट्टे निवेश्यैकोनचत्वारिंशदधिकैकादशशततमे समे स्वर्गं गताः, पश्चादष्टाविंशतिसमेषु गतेषु सत्सु अर्थाद्विक्रमार्कसप्तषष्ट्यधिकैकादशे समे चैत्यवासी जिनवल्लभगणी देवभद्रसाहाय्येन पूज्यपादश्रीमदभयदेवसूरिपट्टे चित्रकूटे विराजितः। पश्चादनादिनिधनभवसागरमध्यवर्तिनां रागद्वेषपंचानननाननपतितानां कथमपि गिरिसरिदुपलन्यायेन कोटाकोट्यन्तःकृतकर्मस्थितिकानां

मोक्षायस्वर्गरिसर्गसुदितधनाना सेवामिषेण सत्प्रार्थ्यमानानां भव्यसिद्धिकसत्त्वानां च शीघ्रतरपञ्चविंशतितमविबुधा वासवर्त्तिनिर्भरानंदानंतगुणानुपमेयस्वानुभवध्यानवर्सदोहदायकत्वेनाधरीकृतसुरधेनुप्रमुखपदार्थसार्थस्य चरमतीर्थंकर श्रीमद्वर्धमानस्वामिनः गर्भसंहृतिनामकं षष्ठं कल्याणकं प्रकाशितं । यदाह सार्धशतकवृत्तौ—"पञ्चनादात्मना तृतीयः सिद्धान्तविधिना जिनवल्लभगणी चित्रकूटे विहृतः, तत्र चामुण्डा प्रतिबोधिता, साधारणश्राद्धस्य परिग्रहप्रमाणं प्रदर्श, श्रीमन्महावीरस्य गर्भापहाराभिधं षष्ठं कल्याणकं प्रकटितमिति" । इत्याद्युल्लेखानुसारेण वृत्तिकारकाले विद्यमान एवासीदित्यनुमीयते । अनेन महात्मना संघपट्टक—धर्मशिक्षा—पञ्चाशीत्याद्यनेकग्रन्थाः कृताः सन्ति । अस्य जिन वल्लभगणिचरितं जिज्ञासुभिर्गणधरसार्धशतकोऽवलोकनीयः ।

परमत्र संहननव्याख्याधिकारे यदुक्तं—"सुत्ते सत्तिविसेसो" तत्तु समयविद्भिः समालोचनीयं, समयेऽस्थिरचनात्म कस्यैव स्वीकृतत्वात् । यदुक्तं विचारामृतसिन्धौ—सूक्ष्मसूक्ष्मतरपदार्थसार्थवर्णनोपेतानाविकालसंतत्मिथ्यात्वाविरतक षायाद्यन्तराराविवर्गस्वान्तव्यापारार्जितमूलककर्माष्टकमहामलापनयनदमनानाविषयमनियमभावोर्मियुक्पारिप्लुतपूर्णगाढतरकुत्सदसमर्थकषायतापनीयत्यागतचिरंतनमुनिपुङ्गवजीवनचरनिर्जयमीनोपशोभिते राद्धान्तरत्नाकरे दुष्षमा रकराक्षसेन कवलीयमानमेधायुर्बलानामैदंयुगीनजनानां प्रवेशाय सरलनयाश्रयादिवृत्त्या बद्धतटैः विबुधेनार्चनीयक्रमकजैः श्रीमदभयदेवसूरिपादैः—"इह संहननं अस्थिरचनाविशेषः" । तथा—चरणसंस्पर्शिरजोभिः पवित्रितजनरूपैः श्रीमद्देवेन्द्र सूरिपादैः त्रैलोक्यदीपिकावृत्तावपि तथैवाभिधानात् । तत्पाठश्चायम्—"संहन्यन्ते संहतिविशेषं प्राप्यन्ते शारीरास्थ्यवयवाः

यैस्तानि संहननानि दृढदृढतरादयः शरीरबंधाः"। ननु तर्हि एकेंद्रियाणां सेवार्त्तसंहननं जीवाभिगमोपांगे विबुधानां च वज्रर्षभनाराचं प्रज्ञापनादौ प्रोक्तमस्ति तत्र भवतां का गतिरिति चेत् न एकाक्षाणां सुधाशिनां च शक्तिमपेक्ष्यौपचारिकमुक्तं। तथाहि–एकाक्षाणामत्यन्ताल्पीयसी शक्तिरेतत्शक्तिविषयश्च सेवार्तसंहननस्य यदौदारिकशरीरसंबंधमात्रमपेक्ष्य द्रष्टव्यं। निर्जराणामपि चक्रवर्तिभ्योऽप्यत्यन्तमहती शक्तिः सा च प्रथमसंहननविषया इति। न चैतत् ग्रंथकृद्भिः सूत्रे शक्तिविशेषं संहननमुक्तं, वृत्तिकृता तु तदभिप्रायः प्रकटीकृतः, तत् किमर्थं भवद्भिः समालोचनीयमुच्यत इति वाच्यं। ग्रंथकृद्भिस्तु "सुत्ते सत्तिविसेसो" इत्यनेन सूत्रे शक्तिविशेषं संहननं संस्थापितं। वृत्तिकारेणापि तदेवातिदृढीकृतं, न त्वौपचारिकमुक्तं। ननूपचारोऽपि सद्वस्तुन एव क्रियते, न त्वसद्वस्तुन इति चेत्, सत्यं, परम्–"अतस्मिन् तदध्यवसायः उपचारः" इति वचनात् उपचारोऽप्यसत्येव सद्वस्तुनो न तु सद्वस्तुनि सद्वस्तुनः। अपि च सूत्रे शक्तिविशेषः संहननं स्यात्, तर्हि जीवाभिगमसूत्रे कथं देवनारका असंहननाः प्रोक्ताः। तथाच तद्ग्रंथः—"सुरनेरइया छण्हं संघयणाणं असंघयणा" इति। पुनः तत्रैव हेतुमद्भावेनोक्तं "नेवट्ठी नेव सिरा नेव ण्हारु नेव संघयणमत्थीत्ति"। किंच सूत्रे शक्तिविशेषः संहननं तर्हि गर्भजनरतिरश्चामपि ग्रंथकृदभिप्रायेण सूत्रे शक्तिविशेषः संहननमुक्तं स्यात्; तच्च कुत्रचिदागमे नोपलभ्यते इति। एतच्च स्वमनीषिकया विजृंभितं, किंतूत्पत्तिविनाशादिजीवनापूर्णभवाब्धिनिमज्जत्सत्वोद्धरणपोतायमानैः श्रीमन्मलयगिरिसूरिपादैः जीवाभिगमाद्युपांगवृत्तिषु तथैवोल्लेखो कृतः। तद्ग्रंथश्चायम्—"अस्थिनिचयात्मकं च संहननमतोऽस्थ्याद्यभावादसंहननानि शरीराणि। इयमत्र भावना—इह तत्त्ववृत्त्या संहननमस्थिनिचयात्मकं। यत्तु प्रागेकेंद्रियाणां सेवार्त्तसंहनन-

मन्यभावि, तदौदारिकशरीरसंबन्धमात्रमपेक्ष्यौपचारिकं । देवा अपि यदन्यत्र प्रज्ञापनादौ वज्रर्षभनाराचसंहननिन उच्यन्ते तेऽपि गौणवृत्त्या । तथाहि—इह यादृशी मनुष्यलोके चक्रवर्त्यादिविशिष्टवज्रर्षभनाराचसंहननिनः सकललोकमनुष्यअनासाधारणी शक्तिः—पोडशवत्तीसा सयमबलं तु सकलनिवहमित्यादिका, ततोऽप्यधिकतरा देवानां पर्वतोत्पाटनादिविषया श्रूयते, न च शरीरपरिक्लेश इति । तेऽपि वज्रर्षभनाराचसंहननिन उक्ता, न पुनः परमार्थतस्ते संहननिनः, ततो नारकाणामस्थ्यभावात् संहननाभावः । एतेन योऽपरिगतजगत्सिद्धान्तसारो वावदूकः सिद्धान्तधाटुस्यमात्मनः ख्यापयन्नेवं मखलाप "सुत्ते सत्तिविसेसो संघयणमिहट्ठीनिचयो त्ति" इति सोऽपाकर्णो द्रष्टव्यः । साक्षादत्रैव सूत्रेऽस्थिनिचयाभावस्य "त्रैलोक्यदीपिकावृत्तावप्युल्लेखित । तस्य पुनः" सकलस्य संहननस्याभिधानात् । अस्थ्यभावे संहननप्रतिषेधात् इति" । एवमेव त्रैलोक्यदीपिकावृत्तावप्युल्लेखित । तस्य पुनः समकस्य संहननस्याभिधानात् । अस्थ्यभावे संहननप्रतिषेधात् इति" । एवमेव त्रैलोक्यदीपिकावृत्तावप्युल्लेखित । तत्त्व पुनः कस्तत्त्वा जानाति ।

पञ्चाशीतितमायां गाथायामस्यसूत्रविचारे पर्याप्तसंज्ञिपञ्चेन्द्रियोत्कृष्टयोगादनुत्तरोपपातिसुधाशुभासुरकृष्टयोगोऽसंख्येयगुण उदितः । कर्मप्रकृत्यां त्वाराध्यपादैः श्रीमलयगिरिसूरिभिः पर्याप्तासंज्ञ्युत्कृष्टयोगादनुत्तरदेवानामुत्कृष्टो योगोऽसंख्येयगुणः ततः क्रमेण ग्रैवेयकादिविशेषितसंज्ञिभेदाः प्रत्यपादिषत, परं मध्ये संज्ञिसामान्यभेदो न न्यगादिषत, तदेव सांप्रतं प्रतिपादि । अन्यथानुत्तरसुरादिभेदानां सामान्यसंज्ञिभेदान्तर्भावितत्वेन पृथगुपन्यासो नोपपुज्यते । यत्तु देवेन्द्रतपापर्कवैः श्रीमद्देवेन्द्रसूरिपादैः स्वोपज्ञशतकवृत्तौ एवमेवोक्तं तदप्येतन्मर्मानुसारेणानुमीयते । सत्त्वं तु श्रीसीमंधरो वेत्ति ।

वर्गणाप्रतिपादनावसरे यदन्यधायि जगति ये केचन परमाणवस्तेषां समुदायः परमाणुवर्गणा श्रीमन्मलयगिरिसूरिपूज्यपादैस्तु एकैकपरमाणवः परमाणुवर्गणा, इह परमाणुशब्दः समुदायवाची तत एकैकस्मिन् परमाणौ वर्गणाशब्दोऽनेकपर्यायोपनिपातापेक्षया द्रष्टव्यः इत्युक्तं. न्यायाचार्यश्रीमद्यशोविजयवाचकपुङ्गवैस्तु योग्यतामादाय वर्गणाशब्दोपवर्णितः । एते त्रयोऽप्यादर्शाः समीचीनाः प्रतिभान्ति । ननु ग्रंथकृन्मते अंगुलासंख्येयभागावगाढक्षेत्रं इति विरुध्येत, एकैकपरमाणूनां सर्वलोकगतत्वादिति चेत् न एतन्मतेनौदारिकादिवर्गणानामंगुलासंख्येयभागावगाढक्षेत्रं द्रष्टव्यं, न तु परमाणुद्व्यणुकादिवर्गणानामिति संभाव्यते । तत्त्वं पुनः केवलवेधसो विदन्ति ।

अत्र इह नाणदंसणइत्यादिगाथोक्तकर्माष्टकक्रममुल्लंघ्य दर्शनावरणज्ञानावरणान्तरायमोहनीयायुर्गोत्रवेदनीयनामरूपेण व्यानशि तत् प्रतिभाशालिनाम् विचित्रं प्रतिभासिष्यते, परं तत् कारणपुरस्सरं वृत्तिकृद्भिः समाहितं । षष्ठ्येकषष्टितमयोः पत्रयोः यंत्रकस्थापनायां मुद्रितशतकमवलोकनीयमिति टीपणिकायां न्यगादि, तत्त्वनुक्रमापेक्षया न तु यंत्रकन्यासापेक्षयेति । षड्विंशतितमे दले निरन्तरबन्धाधिकारे टीप्पणिकारेण यन्न्यगादि तन्मूलोपरि न भ्रमितव्यं ।

तदेवं सूक्ष्मसूक्ष्मतरपदार्थविचारणया यथार्थाभिधानं प्रकरणमिदं कृतं । मुद्रितं च सिद्धान्तरहस्यनिष्णातानां पंन्यासपदालङ्कृतानां श्रीकमलविजयगणिनां सुशिष्यस्य श्रीमोहनविजयमुनिवरस्य सदुपदेशेन कमोदवास्तव्य शाह मूलचंद भलाजीप्रमुखसुश्रावकद्रव्यसाहाय्येन परिषदैतया । प्रतिकृति ( प्रेसकोपी ) श्च सिद्धान्तरहस्यपरिमलवासितान्तःकरणैरनु-

योगाचार्यपदं दधद्भिः पूज्यश्रीमद्दानविजयगणिभिः संशोधिता । अस्य मुद्रणं चैतत्संसदीयशास्त्रियर्यश्रीज्येष्ठारामैः संशोधितं । स्यात् प्रमादादिदोषप्राचुर्यादशुद्धिः सा मतिमद्भिः कृपामाधायैतत्संसदि ज्ञापनीया । ससत् सोपकार द्वितीयावामावृत्तौ सपयोगं नेष्यति ।

दुःखादिकपूर्णकूपनिमग्नजन्यसिद्धिकसत्वोद्धरणाय स्वान्तःकरणस्थितरागाम्बरहस्यविज्ञानरज्जुप्रदानेन सान्वर्थकाभिधानं बिभ्रदनुयोगाचार्योपाधिधारकपूज्यपादश्रीमद्दानविजयगणिशत्रुंजयमहातीर्थपूतरजोसंस्पर्शपवित्रीकृतचरणकमनुगायमानेन प्रेमविजयाख्येन भिक्षुणा लघुतमविनेयेन सकलजन्यजनसंदोहासेवितपरमपवित्रीकृतसिद्धक्षेत्रेऽलेखि द्वितीयवैशाखकृष्णपक्षतृतीयायां ॥

## ॥ अथ विषयानुक्रमः ॥

## ॥ शुद्धिपत्रकम् ॥

| पत्र | पृष्ठं | पंक्तिः | अशुद्ध | शुद्ध |
|---|---|---|---|---|
| १ | २ | १० | ईरणं ईरं | ईरणं ईरं |
| २ | २ | ९ | न्धाना | न्धानां |
| ६ | २ | ३ | त्राणा | त्राणां |
| ६ | २ | ४ | सर्वेषा | सर्वेषां |
| ७ | १ | २ | केवलाना | केवलाना |
| ७ | २ | ८ | भ्रयन्ते | म्रियन्ते |
| १४ | २ | ६ | अप | अव |
| १६ | २ | ८ | यहन्नादा | यद्यादा |
| २१ | १ | १ | तेवत्तरि | तिसत्तरि |
| २७ | २ | १० | सजवत्ति | संजयत्ति |
| २७ | २ | ११ | परणच | परणच्चतु |
| २९ | २ | ६ | प्रकृतिद्वार | प्रकृतिद्वारं |
| २९ | २ | १२ | सप्तकमद्दा | सप्तकमाद्दा |
| २९ | २ | १३ | मित्यता | मित्येता |
| ३१ | २ | ४ | याङ्वरत | याऽविरत |
| ५७ | २ | ७ | सपराये | संपराये |
| ५८ | १ | ८ | नारकत्रिक | नरकत्रिक |
| ७० | १ | ११ | चरित्र | चारित्र |
| ७१ | २ | ९ | तज्ञाग | तन्नाग |
| ८२ | १ | ९ | पडुप्रसि | पडु अ सि |
| ८२ | १ | १० | ओग र्च | ओगर्छ |
| ८४ | २ | ११ | काशप्रदेशप्रदेशाम | काशप्रदेशाम |
| ९१ | १ | ७ | मागयगण | मागयण |

# । सूक्ष्मार्थविचारसारोद्धारसार्धशतकवृत्तिः ।

ॐ नमः सर्वज्ञाय ।

यज्ज्ञानदर्पणतलप्रतिबिम्बितरूपं, कर्मप्रपञ्चमुपलभ्य विशुद्धचित्ताः ।
तच्छेदनेऽतिनिपुणाः प्रभवन्ति भव्याः, सद्भक्तितस्तमिह वीरजिनं प्रणम्य ॥ १ ॥
शास्त्रान्तरानुसारात्सूक्ष्मार्थविचारसारशास्त्रस्य । सार्धशतकस्य वृत्तिं, विदधे स्वपरोपकाराय ॥ २ ॥

इहातिगम्भीरापारसंसारपारावारविहारिजन्तुनाऽतिनिबिडशैवलवलयविस्फुरितान्धकारमहाह्रदविवरनिर्गतग्रीवकच्छपेनेव करप्रसरविधुरितान्धकारतारतारकपरिकरितकौमुदीशशाङ्कदर्शनमिवावाप्यातिदुष्प्रापं जिनधर्मान्वितं मानुषत्वं सकलपुरुषार्थसारे परोपकारे यतितव्यं । स च न निखिलकल्याणकारिजिनशासनोपदेशमन्तरेण । तस्य च प्रभूततरपदार्थविषयत्वेऽपि प्रथमं तावत्कर्मणः सकलदुःखोपनिपातहेतुत्वेन परमारातिभूतत्वात्तत्स्वरूपप्रकाशनविषये एवासौ युक्तः, तत्परिज्ञाने हि सदनुष्ठानतस्तदुच्छेदमाधाय प्राणिनः परमपदसंपदं सपदि समासादयन्तीति । तत्स्वरूपप्रकाशनं च यद्यपि कर्मप्रकृत्यादिषु प्रभूततरग्रन्थेषु विहितमेव, तथापि तेऽतिविस्तीर्णत्वेनातिगम्भीरतया च दुरवगाहत्वाद्विशिष्टसंहननमेधादि-

रचितानामिदानींतनमानवानां न तथाविधोपकारायाखं, अतस्तेषामनुग्रहाय कर्मप्रकृतिपञ्चसंग्रहादिशास्त्रादेवोद्धृत्य कर्मगतकतिचित्पदार्थानां प्रसङ्गतस्तदितरेषां च केषाञ्चित्स्वरूपख्यापनाय सूक्ष्मपदार्थनिष्कनिष्क(क)षणाकषपट्टकसंनिभमतिजः श्रीजिनचन्द्रनास्यः सूरिः सार्धशतकाख्यं प्रकरणं चिकीर्षुर्विघ्नविनायकोपशान्तये शिष्टाचाराचरणाय च मङ्गलं श्रोतृजनप्रवृत्त्यर्थमभिधेयादि च प्रतिपादयितुमिमां गाथामाह—

सयलंतरारिवीरं, वंदिय वरनाणलोअण वीरं । वुच्छं जहासुअमहं, कम्माइविआरसारलवं ॥ १ ॥

व्याख्या—सकलान् समस्तानान्तरानन्तर्जन्मानरीन् शत्रून् रागद्वेषादीन् विशेषत ईरयति गमयत्यपनयतीति यावत् सकलान्तरारिवीरोऽतस्तं वन्दित्वाऽभिवाद्य स्तुत्वा वा। पुनरपि कथंभूतमित्याह—'वरनाणलोयणं ति' वरं स्वकीयावरणद्वयोन्मूलनामविहतत्वाच्छ्रेष्ठं ज्ञानमेव लोचनं सकलपदार्थावलोकनचतुरं चक्षुर्यस्य स तथा तं । यद्वा लोचनं दृष्टिर्दर्शनमिति यावत्, तच्चेह सामान्यमात्रबोधरूपं, ततो वरे ज्ञानलोचने ज्ञानदर्शने यस्य स तथा त । कमित्याह—'वीरमिति' तत्र विशेषत ईर्ते परमपदं गच्छतीति पचाद्यच्विधानाद्वीरः । यद्वा ईरणं ईर इति भावे घञ्, ततश्च विशिष्ट ईरो गमनं "सर्वे गत्यर्था ज्ञानार्थाः" इतिवचनाज्ज्ञानं वा यस्य स वीरः । अथवा विशिष्टतपोरूपा तीर्थकरनामकर्मोदयसमुद्भूतातिशयलक्षणा वा यका ईर्ष्यमीलया राजते शोभत इति, अन्यतोऽपि चेति रूपत्यये वीरः । तमित्थंभूतं वीरं वर्धमानतीर्थाधिपतिं वन्दित्वेति योगः । क्त्वान्तस्योत्तरक्रियासव्यपेक्षत्वेनोत्तरक्रियामाह—वक्ष्येऽभिधास्ये कर्मादिविचारसारलवमिति संटङ्कः । कथमित्याह—यथाश्रुतं येन प्रकारेण श्रुतमाकर्णितं स्वगुरुभ्यः। अथवा श्रुतस्यागमस्यानतिक्रमेण यथा-

श्रुतं, श्रुतानुसारत इत्यर्थः, न तु स्वमनीषिकया । अहमित्यात्मनिर्देशे । कर्म वक्ष्यमाणशब्दार्थमादिर्येषां पुद्गलपरावर्तादीनामर्थानां ते तथा तेषां विचारो यथावस्थितप्ररूपणं तस्य सारो निस्यन्दस्तस्य लवः शास्त्रान्तरोदितप्रचुरतरपदार्थविचारापेक्षया लेशस्तं, कर्मादिविषयसूक्ष्मतरकतिचित्पदार्थात्मकमंशमित्यर्थः । इह च पूर्वार्द्धेनेष्टदेवतास्तवविधानेन मंगलमभिहितं । कर्मादिविचारसारलवं वक्ष्य इति चाभिधेयं। प्रयोजनं चानन्तरपरंपरभेदाद्द्विधा, पुनरेकैकं कर्तृश्रोतृभेदाद्द्विधैव, तत्र कर्तुरनन्तरप्रयोजनं सत्त्वानुग्रहः, श्रोतुश्च सूक्ष्मपदार्थपरिज्ञानं, परंपरं तु द्वयोरपि सूक्ष्मार्थप्रकाशनपरिज्ञानाभ्यां परमपदप्राप्तिः । संबन्धस्त्वागमानुसारिणः प्रति गुरुपर्वक्रमलक्षणः । स च यथाश्रुतमितिवचनात्सूत्र एव निवेदितः । तर्कानुसारिणश्च प्रति शास्त्रप्रयोजनयोः संबन्ध उपायोपेयलक्षणः । शास्त्राभिधेययोश्च वाच्यवाचकस्वरूपः स्वत एवाभ्यूह्य इति गाथार्थः ॥१॥

कर्मादिविचारसारलवं वक्ष्य इत्युक्तमतः प्रथमं तावत्कर्मशब्दार्थं तस्यैव कर्मणो मूलोत्तररूपान् भेदांश्च निरूपयितुमाह—

**कीरइ जिएण हेऊहिं पयइठिइरसपएसउ जं तं । मुलुत्तर ठ अडवन्नसयप्पभेयं भवे कम्मं ॥ २ ॥**

व्याख्या—क्रियतेऽञ्जनचूर्णपूर्णसमुद्गकवन्निरन्तरं पुद्गलनिचिते लोके क्षीरनीरन्यायेन वह्न्ययःपिण्डवद्वा कर्मवर्गणापुद्गलद्रव्यं जीवप्रदेशानुषक्तं विधीयते यत्तत्कर्मेत्युत्तरेण संबन्धः । केन क्रियत इत्याह—जीवेन जन्तुना । कैरित्याह—हेतुभिर्मिथ्यात्वादिभिः सामान्यरूपैः प्रत्यनीकत्वादिभिश्च विशेषप्रकारैः । तथाहि—दर्शनप्रत्यनीकतया दर्शननिह्नवेन दर्शनान्तरायेण दर्शनप्रद्वेषेण दर्शनात्याशातनया दर्शनविसंवादेन दर्शनावरणीयं कर्म बध्यते। एवं ज्ञानप्रत्यनीकतया यावज्ज्ञानविसंवादेन ज्ञानावरणीयं कर्म बध्यते । तथा दानलाभभोगोपभोगवीर्यान्तरायविधानादान्तरायकं कर्म बध्यते । तथाऽनन्तानुब-

म्युत्कटतया तीव्रदर्शनमोहनीयतया प्रबलचारित्रमोहनीयसद्भावान्मोहनीयं कर्म बध्यते । महारंभतया महापरिग्रहतया पञ्चेन्द्रियवधात्कुणपाहारेण च नरकायुष्कं बध्यते । मायावितयाऽनृतवादेन कूटतुलाकूटमानव्यवहारात्तिर्यगायुर्बध्यते । प्रकृतिविनीततया सानुक्रोशतयाऽमात्सर्यान्मनुष्यायुष्कं । सरागसंयमेन देशविरत्या बालतपसाऽकामनिर्जरया च देवायुष्कमिति । जातिकुलबलरूपतपःश्रुतलाभैश्वर्यमदाभावादुच्चैर्गोत्रं । जात्यादिमदात्परपरिवादाच्च नीचैर्गोत्रं बध्यते । तथा प्राणिनामनुकंपनतयाऽभीरुतया च सातवेदनीयं कर्म बध्यते । एतद्विपर्ययाच्चासातवेदनीयं । तथा कायर्जुतया भावर्जुतया भाषर्जुतयाऽविसंवादनयोगेन च शुभनाम बध्यते । विपर्ययाच्चाशुभनामेति । इत्येते प्रत्यनीकतादयो विशेषहेतवस्तैर्बद्यत् क्रियत इति । कथमित्याह—"पयइठिइरसपएसउ त्ति" इह ल्यब्लोपे पञ्चम्युपसंख्यानमितिवचनाल्ल्यब्लोपे पञ्चमीयं । ततश्च प्रकृतिस्थितिरसप्रदेशानाश्रित्येति प्रकृतिस्थित्यनुभागप्रदेशबन्धतयेत्यर्थः । तत्र स्थित्यनुभागप्रदेशबन्धानां यः समुदायः स प्रकृतिबन्धः । अध्यवसायविशेषगृहीतस्य च कर्मदलिकस्य यत् स्थितिकालनियमनं स स्थितिबन्धः । कर्मपुद्गलानामेव शुभोऽशुभो वा घात्यघाती वा यो रसः सोऽनुभागबन्धः । प्रदेशानामेव कर्मपुद्गलानां यद्ग्रहणं स्थितिरसनिरपेक्षं दलिकसंख्याप्राधान्येनैव करोति स प्रदेशबन्ध इति । तदुक्तं—"ठिइबंधु दलस्स ठिई, पएसबंधो पएसगहणं जं । ताण रसो अणुभागो, तस्समुदाओ पगइबंधो ॥ १ ॥" अन्ये तु प्रकृतिस्थित्यनुभागप्रदेशानां स्वरूपं मोदकदृष्टान्तानुसारतः कर्मणो व्याचक्षते । यथा वातविनाशिद्रव्यनिष्पन्नो मोदकः प्रकृत्या वातमुपशमयति, पित्तोपशमकद्रव्यनिर्वृत्तः पित्तं, कफापहारिद्रव्यसमुद्भूतः कफमिति, एवंस्वभावा प्रकृतिः । स्थितिस्तु तस्यैव कस्यचिद्दिनमेकं, अपरस्य

तु दिनद्वयं, एवं यावत्कस्यचिन्मासादिकमपि कालं जवति, ततः परं विनाशादिति। रसस्तु स्निग्धमधुरादिरूपस्तस्यैव कस्यचिदेकगुणोऽपरस्य द्विगुणोऽन्यस्य तु त्रिगुण इत्यादिकः। प्रदेशाश्च कणिकादिरूपास्तस्यैव कस्यचिदेकप्रसृतिप्रमाणा अपरस्य तु प्रसृतिद्वयप्रमाणा यावदन्यस्य सेतिकादिप्रमाणाः। एवं कर्मणोऽपि कस्यचिद्दर्शनाच्छादनस्वजावा प्रकृतिः, अपरस्य ज्ञानावरणरूपा, अन्यस्य तु दानादिविघातजननस्वजावेत्यादि। स्थितिश्च तस्यैव कस्यचित्त्रिंशत्सागरोपमकोटीकोटीरूपा, अपरस्य तु सप्ततिसागरोपमकोटीकोटिलक्षणेत्यादि। रसस्त्वनुजागशब्दवाच्यस्तस्यैकस्थानद्विस्थानादिरूपः। प्रदेशा अल्पबहुबहुतरबहुतमादिरूपाः। एतच्च ग्रन्थकार उत्तरत्र स्वयमेव वक्ष्यतीति प्रकृतिस्थित्यनुजागप्रदेशानाश्रित्य यत् क्रियत इति स्थितं। यत्तच्छब्दयोश्च योजना कृतैवेति। कियज्जेदं पुनस्तत्कर्म जवतीत्याह—"मूलुत्तरपगईअडवन्नसयप्पजेयं ति" इह मूल त्ति मूलप्रकृतयः, ताश्च सामान्यरूपाः। उत्तर त्ति उत्तरप्रकृतयः, ताश्च मूलप्रकृतिविशेषरूपा एव, ततो मूलाश्चोत्तराश्च मूलोत्तरास्ततोऽष्टौ चाष्टपञ्चाशच्छतं चाष्टाष्टपंचाशच्छतं मूलोत्तरासु प्रकृतिषु विपर्येऽष्टाष्टपञ्चाशच्छतं, तत्प्रजेदा यस्य तत्तथेति जवेजायेत। कर्मेति साध्यपदमिति गाथार्थः॥ २॥

अधुना मूलप्रकृतिजेदस्तस्यैवाष्टविधत्वमुत्तरत्र प्रकृतिजेदतोऽष्टपञ्चाशच्छतजेदत्वं च दर्शयन् सनामग्राहमष्टौ मूलजेदानेकैकस्य च जेदस्य यस्य यावन्त उत्तरजेदास्तांश्च वक्तुमाह—

**दंसणनाणावरणंतरायमोहाउगोअवेयणियं। नामं च नवपणपणठवीसचउडुवियालविहं॥ ३॥**

व्याख्या—दृश्यतेऽनेन दृष्टिर्वा दर्शनं सामान्यावबोधः। ज्ञायतेऽनेन ज्ञप्तिर्वा ज्ञानं सामान्यविशेषात्मके वस्तुनि विशे-

पमदृणात्मकोऽवबोध इत्यर्थः । आव्रियते आच्छाद्यतेऽनेन आवृणोतीति वा आवरणं मिथ्यात्वादिसचिवजीवव्यापारा हृतकर्मवर्गणान्तःपातिविशिष्टपुद्गलसमूह इत्यर्थः । ततो दर्शनं च ज्ञानं (च) तयोरावरणे इति विग्रहः । अन्तरा दातृप्रतिग्राहकयोरन्तर्विघ्नहेतुतयाऽयते गच्छतीत्यन्तरायं । मोहयति जानानमपि प्राणिनं विचित्तताजननेनेति मोहः । आयात्यागच्छति प्रतिबन्धकतां स्वकृतकर्मावाप्तनरकादिकुगतेर्निष्क्रमितुमनसोऽपि जन्तोरित्यायुः । गूयते शब्द्यते उच्चा वचैः शब्दैरात्मा यस्मात्तद्गोत्रं । वेद्यते सुखदुःखतयाऽनुभूयते यत्तद्वेदनीयं । ततश्च दर्शनज्ञानावरणे चान्तरायं चेत्यादि समाहारद्वन्द्वः । कर्मोच्यत इति शेषः । तथा नामयति गत्यादिविविधपर्यायानुभवनं प्रति जीवं प्रवणयति यत्तन्नाम । चः समुच्चये । एतत् कियद्भेदं भवतीत्याह—"नवपणपणेत्यादि" अत्र द्वन्द्वगर्भो बहुव्रीहिः । गाथार्थश्चायं—नवभेदं दर्शनावरणीयं, पञ्चप्रकारं ज्ञानावरणीयं, पञ्चविधमन्तरायं, अष्टाविंशतिभेदभिन्नो मोहः, चतूरूपमायुः, द्विप्रकारं गोत्रं, द्विभेदं वेदनीयं, द्विचत्वारिंशद्भेदभिन्नं नामेति । अत्राह परः—ननु ग्रन्थान्तरेषु ज्ञानावरणादिक्रमेण कर्मणां निर्देशो विधते, इह त्वन्यथेति किमत्र कारणमित्यत्रोच्यते—इह ज्ञानदर्शनस्वभावोऽयमात्मेत्यन्तरङ्गत्वात्तयोरादित स्तदावरणोपादानं यक्तम्यं । तत्र च समानेऽपि तयोरन्तरङ्गत्वे छद्मस्थस्य दर्शनपूर्वक एव ज्ञानोपयोग इति दर्शनावरणस्येह प्रथमत उपादानं, तदनु ज्ञानावरणस्य । ततोऽपि ज्ञानावरणेन सह बन्धोदयोदीरणा-सत्ताभिः प्रकृतिसंख्यया स्थितित्वेन च तुल्यत्वादन्तरायस्य । ततोऽपि घातिकर्मसाम्यान्मोहनीयस्य । तदनु च तद्विपक्ष-भूतस्याघातिकर्मचतुष्टयस्य । तत्रापि प्रथममल्पस्थितित्वेनायुष्कस्य । तदनु च नाम्नः प्रस्तावेऽपि बहुवक्तव्यत्वात्परित्यज्य

गोत्रवेदनीययोस्तत्राप्यल्पस्थितिकत्वात्प्रथमं गोत्रस्य, तदनु बहुस्थितिकत्वात्केवलिनमपि यावत्सातबन्धसंभवेन तद्बन्धस्यायोगिवर्जसर्वगुणस्थानकातिव्या(नव्या)पित्वाच्च वेदनीयस्य । तदनु च सर्वस्यापि कर्मोदयस्य प्रायो गत्यादिनामकर्मोदयाविनाभावित्वात्प्रभूतवक्तव्यत्वाच्चान्ते नाम्न उपन्यास इति गाथार्थः ॥ ३ ॥

अधुना नवपणपणेत्यादि यदुक्तं संख्यानं, तदभिधातुकाम आदौ तावन्नवधा दर्शननावरणमाह—

**नयणेयरोहिकेवलदंसणआवरणं भवे चउहा । निद्दापयलाहिं छहा निद्दाइदुरुत्तथीणद्धी ॥ ४ ॥**

व्याख्या—नयनं चक्षुरितरच्चाचक्षुश्चक्षुर्वर्जशेषेन्द्रियमनांसीत्यर्थः । ततो नयनं चेतरच्चावधिश्च केवलं चेति द्वन्द्वः । तत एतैर्दर्शनानि, तेषामावरणमेवावरणकमिति समासः । दर्शनावरणशब्दश्च प्रथमार्धभेदेषु प्रत्येकं संबन्धनीयः, ततो नयनदर्शनावरणमित्यादि योज्यं । भवेत्संपद्येत । चतुर्धा चतुःप्रकारं । इह तु चतुःसंख्ययाऽन्यत्र दर्शनचतुष्कग्रहणे आसामेव चतसृणां ग्रहणं प्रतिपत्तव्यमिति सूचयति । एतदेव चतूरूपं निद्राप्रचलाभ्यां सह षोढा षड्भेदं भवति, षोढाग्रहणेन दर्शनषट्कग्रहणेऽन्यत्रैता एव षट् ग्राह्या इति सूचयति । "निद्दाइदुरुत्त त्ति" निद्रा आदिर्ययोस्तौ निद्रादी, "अवयवेन विग्रहः समुदायः समासार्थ" इतिवचनान्निद्राप्रचलाख्यौ शब्दौ, ततो निद्राद्योर्द्विरुक्तं द्विरुच्चारणं यत्र प्रकृतिद्वये वाचकतया तन्निद्रादिद्विरुक्तं, तच्च स्त्यानगृद्धिश्च विभक्तिलोपान्निद्रादिद्विरुक्तस्त्यानगृद्धयः । किमुक्तं भवति ? निद्रानिद्राप्रचलाप्रचलास्त्यानगृद्ध्युपलक्षितं त्रिकं मन्तव्यं । एवं दर्शनावरणस्य नवोत्तरप्रकृतयस्तन्निष्पन्नं सामान्येन दर्शनावरणं मूलप्रकृतिः, यथा मूलत्वक्पत्रशाखादिसमुदायनिष्पन्नो वृक्षः । एवमुत्तरत्रापि भावनीयमित्यक्षरार्थः । भावार्थस्त्व-

पुनरुच्यते—इह चक्षुर्दर्शनं नाम यच्चक्षुषा रूपसामान्यग्रहणं तस्यावरणमाधारकं कर्म चक्षुर्दर्शनावरणं चक्षुःसामान्योपयोगावरणमिति यावत् । अचक्षुर्निर्वस्तुपरिच्छेदकतया चक्षुःसदृशैः शेषेन्द्रियमनोभिर्दर्शनं स्वस्वविषयसामान्यपरिच्छेदोऽचक्षुर्दर्शनं तस्यावरणमचक्षुर्दर्शनावरणं । अवधिदर्शनमवधिना रूपिद्रव्याणां सामान्यग्रहणं, तस्यावरणमवधिदर्शनावरणं । केवलदर्शनं सर्वद्रव्यपर्यायाणां सामान्यावबोधरूपं, तस्यावरणं केवलदर्शनावरणं । अत्राह—ननु यथाऽवधिदर्शनावरणं कर्मोच्यते एवं तथाविधस्य मनःपर्यायज्ञानस्यापि दर्शनावरणं कर्म किमिति नोच्यते ? अत्रोच्यते—मनःपर्यायज्ञानं तथाविधक्षयोपशमपाटवात्सर्वदा विशेषानेव गृह्णदुत्पद्यते, न सामान्यं, अतस्तद्दर्शनाभावात्तदावरणं कर्मापि न भवति । तथा नियतं द्राति कुत्सितत्वमविस्पष्टं गच्छति चैतन्यमनयेति निद्रा, "करणेऽङ्" सुखप्रबोधा स्वापावस्था, नखच्छोटिकामात्रेणापि यत्र प्रबोधः सम्पद्यते, तद्विपाकहेतुः कर्मप्रकृतिरपि कारणे कार्योपचारान्निद्रेत्युच्यते, एवमन्यत्राप्युपचारो वाच्यः । उपविष्ट ऊर्ध्वस्थितो वा प्रचलत्यस्यां स्वापावस्थायां निद्रायस्किञ्चिदु(दू)नरूपायामिति प्रचला । सा पुनरुपविष्टस्योर्ध्वस्थितस्य वा घूर्णमानस्य स्वप्तुर्भवति । तथा निद्रातिशायिनी निद्रा निद्रानिद्रा शाकपार्थिवादिदर्शनान्मध्य(म)पदलोपी समासः । सा पुनरतिशयनिद्रा दुःखप्रबोधात्मिका स्वापावस्था । तस्यां ह्यत्यर्थमस्फुटीभूतचैतन्यत्वाद्यतो दुःखेन प्रभूतैर्घोलनादिभिः प्रबोधो भवत इति । सुखप्रबोधनिद्रापेक्षया चास्या अतिशयख्यापनार्थं द्विरुच्चारणं । प्रचलातिशायिनी प्रचला प्रचलाप्रचला । सा हि चङ्क्रमणमपि कुर्वतः स्वप्तुर्भवति, अतः स्थानस्थितस्वप्तृजन्यप्रचलापेक्षयाऽतिशायित्वमस्याः । स्त्यानाऽतिबहुत्वेन संघातमापन्ना उपचितेति यावत् गृद्धिर्जाग्रदवस्थाध्यवसितार्थसंसाधनविषयाऽभि

कांक्षा यस्यां स्वापावस्थायां सा स्त्यानगृद्धिः । तस्यां हि सत्यां जाग्रदवस्थाध्यवसितमर्थमुत्थाय साधयति । यद्वा स्त्याना पिण्डीभूता ऋद्धिरात्मशक्तिरूपा यस्यां सा स्त्यानर्द्धिः । तद्भावे हि स्वभुः केशवार्द्धबलसदृशी शक्तिर्भवति, प्रबलरागद्वेषोदयवाँश्च जन्तुर्जायते । तादृशविपाकवेद्या कर्मप्रकृतिरपि स्त्यानगृद्धिस्त्यानर्द्धिर्वेति गाथार्थः ॥ ४ ॥

प्ररूपितं दर्शनावरणीयं नवधाऽधुना ज्ञानावरणमन्तरायं च सप्रभेदं प्ररूपयन्नाह—

**नाणावरणं मइसुअओहिमणोनाणकेवलावरणं । विग्घं दाणे लाभे भोगुवभोगेसु विरिए अ ॥ ५ ॥**

व्याख्या—ज्ञानस्यावरणमावारकं कर्म ज्ञानावरणं पञ्चधा भवतीति प्रक्रमः । तत्रावार्यभेदादावरणस्य भेद इति कृत्वा आवार्यभेदतो ज्ञानावरणभेदानाह—"मतीत्यादि" मतिश्च श्रुतं चेत्यादिद्वन्द्वे मतिश्रुतावधिमनोज्ञानकेवलानि तेषामावरणमिति विग्रहः । इह मध्यभूतस्य ज्ञानशब्दस्यावरणशब्दस्य च प्रत्येकं संबन्धान्मतिज्ञानावरणमित्याद्यभिलापेन संबन्धः कार्यः । तत्र "मन ज्ञाने" मननं मतिः, मन्यते वाऽनया इन्द्रियमनोद्वारेण नियतं वस्तु परिच्छिद्यत इति मतिः, योग्यदेशावस्थितवस्त्वपेक्ष इन्द्रियपञ्चकमनोभ्यां स्वस्वविषयपरिच्छेदको बोधोऽवगम इतियावत् । ततो मतिश्चासौ ज्ञानं चेति विगृह्य तस्यावरणमावारकं कर्म मतिज्ञानावरणं । श्रूयते तदिति श्रुतं शब्दमात्रं, तच्च द्रव्यश्रुतमेव । यत्पुनः शब्दमाकर्णयतः स्वयं वा वदतः पुस्तकादिन्यस्तानि वाऽक्षराणि चक्षुरादिभिरुपलभमानस्य शेषेन्द्रियगृहीतं वार्थं विकल्पयतोऽक्षरानुषक्तविज्ञानमुपजायते तदिह भावश्रुतं श्रुतशब्देन गृह्यते, तदेव ज्ञानं, तस्यावरणं । "ओहि त्ति" अवशब्दोऽधःशब्दार्थः, ततश्चाध इत्यधस्ताद्धावति अधोऽधो विस्तृतविषयवेदकतयेति अवधिः, उणादिको किव् । यद्वा अवेति

अथ एव धानं धातूनामनेकार्थत्वात् परिच्छेदोऽवधिः "उपसर्गे घोः किः" इति किप्रत्ययः । यद्वाऽवधिर्मर्यादा रूपिष्वेव द्रव्येषु परिच्छेदकतया प्रवृत्तिरित्येवंरूपा तदुपलक्षितं ज्ञानमप्यवधिस्तदेव ज्ञानं तस्यावरणमवधिज्ञानावरणं । "मणोनाणं ति" इह मनोद्रव्याणां पर्याया अपि चिन्तनानुगुणा मनःशब्देनोच्यन्ते, द्रव्यपर्याययोः कथंचिदभेदात्, ततो मनःसु मनःपर्यायेषु संज्ञिनां चिन्तनहेतुषु ज्ञानं, मनोद्रव्यपर्यायानेव हि मनःपर्यायज्ञानी साक्षाद्बुध्यते, न तु बाह्यान्, अनुमानगम्यत्वात्तेषां, तथैवं, अमीषां मनोद्रव्याणां एतत्परिणामान्यथानुपपत्तेरेतद्वस्तु चिन्तितमनेनेति । केवलमेकमकलुषं सकलमसाधारणमनन्तमित्यनर्थान्तरं । तत्रैकं तद्भावेऽशेषछाद्मस्थिकज्ञानाभावात् । अकलुषं यथावस्थितवस्तुग्राहकत्वात्। सकलं संपूर्णद्रव्यादिविषयग्राहकत्वात् । असाधारणमनन्यसदृशत्वात् । अनन्तमपर्यवसितकालावस्थायित्वात् । ततः केवलं च तज्ज्ञानं च केवलज्ञानं तस्यावरणं केवलज्ञानावरणं । तत्र मतिज्ञानमवग्रहादिभेदप्रभेदसहितं, श्रुतज्ञानं चाक्षरानक्षरादिप्रभेदभिन्नं, अवधिज्ञानं चानुगाम्यादिप्रभेदं, मनःपर्यायज्ञानं च ऋजुमतिविपुलमतिभेदतो द्विभेदं ग्रन्थान्तरेषु यद्यप्यत्रावसरे निरूपितं, तथापि नेह प्रतन्यते ग्रन्थगौरवभयात्, तत एवावसेयं । तथा विशेषेण हन्यन्ते दानादिलब्धयो विनाश्यन्तेऽनेनेति "स्थास्नापाव्यधिहनियुध्यर्थात्" इति कप्रत्यये विघ्नमन्तरायं कर्म। तच्च विषयभेदात्पञ्चधेति दर्शयति— दीयत इति दानं तत्र । लभ्यत इति लाभस्तस्मिन् । भुज्यते सकृदुपयुज्यत इति भोगः पुष्पाहारादि । उपेति पुनः पुनरुपयुज्यमानतया भुज्यत इति उपभोगो भवनाङ्गनादिः । ततो भोगश्चोपभोगश्च भोगोपभोगौ तयोः। प्राकृते बहुवचनेऽपि द्विवचनाभ्यास्थानात्। विशेषेणेर्यते चेष्ट्यतेऽनेनेति वीर्यं । यद्वा विविधमनेकप्रकारमीरयति यस्माद्विनं क्रियासु तद्वीर्यं

सामर्थ्यं शक्तिरिति यावत् तस्मिन् । चः समुच्चये । सर्वत्र विघ्नमिति योज्यं । विषयसप्तमी चेयं सर्वत्र । ततो दानादि-विषयभेदतो दानादिविषयं पञ्चधा विघ्नं कर्म भवतीति वाक्यार्थः । भावार्थश्चायं—सत्यपि दातव्ये वस्तुनि आगते च गुणवति पात्रे जानन्नपि दानफलं यदुदयाद्दातुं नोत्सहते तद्दानान्तरायं । विशिष्टेऽपि दातरि विद्यमानेऽपि देयवस्तुनि याच्ञाकुशलोऽपि याचको यन्न लभते तल्लाभान्तरायं । सति विभवादौ संपद्यमाने चाहारमाल्यादौ यद्वशान्न भुङ्क्ते तद्भोगान्तरायं । यस्योदयात्सदपि वस्त्रालङ्कारादि नोपभुङ्क्ते तदुपभोगान्तरायं । यद्वशाद्बलवान्नीरुक् वयःस्थोऽथ च तृणकुब्जीकरणेऽप्यसमर्थस्तद्वीर्यान्तरायमिति गाथार्थः ॥ ५ ॥

प्ररूपिते सप्रभेदे ज्ञानावरणीयान्तरायकर्मणी, संप्रति मोहायुर्गोत्रवेदनीयानि स्वस्वप्रभेदयुक्तानि निरूपयितुमाह—

**सोलसकसायनवनोकसायदंसणतिगं ति मोहणीयं । नरयतिरिनरसुराऊ नीउच्चं सायमस्सायं ॥ ६ ॥**

व्याख्या—षोडशसंख्याः कषायाः नवसंख्या नोकषायाः दर्शनत्रिकं चेत्येवं मोहनीयं कर्माष्टाविंशतिविधं भवतीति क्रमः । तत्र कष्यन्ते हिंस्यन्ते परस्परमस्मिन् प्राणिन इति कषः संसारः, कषमयन्ति गच्छन्त्येभिर्जन्तव इति कषायाः क्रोधादयः । यद्वा कषस्यायो लाभो येभ्यस्ते कषायाः । षोडशविधत्वं चैषां क्रोधमानमायालोभानां चतुर्णामपि प्रत्येकमनन्तानुबन्ध्यप्रत्याख्यान प्रत्याख्यानावरणसंज्वलनभेदतश्चातुर्विध्यात् । तत्रेह कषायनोकषायभेदतः षोडशनवसंख्याप्रकारेण पञ्चविंशतिविधं चारित्रमोहनीयं । दर्शनत्रिकेण तु दर्शनमोहनीयं । एवं च द्विविधं मोहनीयं वर्तते । तत्र यद्वशात् श्रद्दधानोऽपि यदि कथञ्चनाहमेतच्चारित्रं प्रतिपद्ये इति जानन्नपि च तत्फलादि न तत्प्रतिपद्यते तच्चारित्रमोहनीयं । दर्शनमोहनीयं च तत्त्वा-

मूढ़बुद्धि मारी प्रिया, गया नदीरे तीर । देख अन्य नर कांमियो, कां कीना अब पीर ? ॥ १ ॥
मूढ़ तेह मति पोखियो, कीधो एह प्रकार । जीव गयो पण रंग छै, सुण मन एह विचार ॥ २ ॥

भाग्यरहितो यत्र गच्छति तत्रैवापदो यान्ति तत्र २४—कथा—

ग्रीष्मे मधुरयो वने विवसनः प्राप्तोऽर्कपा पीडितः, छायां वीक्ष्य गतोऽपि बिल्वतरुतले तस्कै फल प्रापतत् । तच्छ्रुत्वा पततीति चिन्तति तदा यामि क भग्नं शिरो, दुःस्थो गच्छति यत्र याति तदनुच्छायेव शीघ्रं विपद् २५

कश्चिन्नि सः खल्वाटो निदाघकाले निर्वासा भानुभानुभिर्भाले संतापितोऽन्नाभोदन्याभ्यां बाधितो भास्करपादपस्याऽवस्तान्यसीदत् । तदनन्तरं क्षिप्रेव पनं बिल्वफलमपि खल्वाटमपतत् । अथ चिन्तयामास—काऽधुना भजामि ? खल्वाटन्वयत्रासेन त्रस्तो विरसमुपागतस्तत्रापि फलपातेन मे शिरो मग्नम् । दैवहतकस्य मे पृष्ठे छायेवानुगच्छति विपदः ॥ २५ ॥ यदुक्तम्—

खल्वाटो दिवसेश्वरस्य किरणैः सन्तापितो मस्तके, वाञ्छन् देशमनातपं विधिवशाद् बिल्वस्य मूलं गतः। तस्योच्चैः पतता फलेन महता भग्नं सशब्दं शिरः, प्रायो गच्छति यत्र भाग्यरहितस्तत्रापदां राशयः ॥ १ ॥

भाग्यवतः प्राणिनः स्वेष्टवस्तुनः प्राप्तिर्भवत्येव तत्राऽऽह २६ कथानकम्—

क्षिप्तः केन करण्डकेऽपि भुजगः क्षुत्पीडितोऽन्नाशको, रात्रौ खादिमकोऽभयाऽऽशु विवरं कृत्वोन्मुखस्तन्मुखे । भाग्यादेव तदा स्वयं निपतितस्तन्मांसतृप्तोऽभवत्, यातस्तेन यथा क्षणो स्थिरतरं भो ! गीव भाग्यं भवेत् ॥२६॥

कश्चिद्गारुडिकः फणिनमेकं निगृह्य करंडके न्यधात्। तस्मिंश्च क्षुद्बाधितस्तृषार्तश्च जीवने हताशः सन्नास्त। तस्मिन्नेव क्षणे कश्चि-दुन्दुरुरागत्य खाद्यं द्रव्यं विज्ञाय करंडकं भित्त्वा प्राविशत्। प्रविष्ट एव भुजंगो दैववशात् स्वाशनमुपलभ्य तेन सुहित आखुकृतविवरे-णैव निष्क्रान्तो यथेच्छं जगाम। अहिरिव व्यसने पतितस्यापि स्थिरनियतेर्नरस्य शातमेव संपद्यते। भाग्यस्थैर्यं नाम धृतिपरि-पालनं ॥ २६ ॥ सूक्तं केनापि—

**नो कार्या पुरुषैश्चिन्ता, निगडे पतितैरपि। यद्भाले लिखितं धात्रा, भवेद् भोगीव नापरम् ॥ १ ॥**

**बहुसम्मतिके कार्येऽविचार्योत्तरदानेऽनादरो भवति तत्र २६–दृष्टान्तः—**

**नत्वा पृच्छति कार्षिको निजगुरुं वर्षा न वा वर्षेति, क्षेत्रे ते निशि वक्ति सोऽपि न परे लात्वा सशिष्यो घटान्।**
**कूपात्सिंचाति कं परा हि मनुजाः श्रुत्वेति वार्ता गुरो-स्ते पृच्छन्ति तथा ब्रवीषि वहसि प्राहुर्विनेयास्तदा ॥२७॥**

कश्चित्कृषकः स्वगुरुं प्रणम्य पृच्छति–भगवन्! देवो वर्षिष्यति न वाऽस्मत्क्षेत्रे सर्वमप्युप्तं धान्यं शुष्यति। गुरुरुवाच–भो! अद्य ते केदारे मेघो वर्षिष्यति, परमन्येषां न विजानामि। अथो सशिष्यो गुरुर्यामिन्यां शस्यक्षेत्रे अन्धोर्जलकलशमापूर्य आरात्रं क्षेत्रं परिषिषेच। ततः क्षेत्रपतिः स्वं केदारं सिक्तं विलोक्य तुष्टोऽभवत्। अमुमुदन्तं परे जनाः समाकर्ण्य गुर्वन्तिकमुपेत्य यथापूर्वं नतिं प्रकल्प्य पप्रच्छुः। तदा गुरुणाऽपि तेभ्यः पूर्ववदेवाऽभिहितम्–तन्निशम्य विनेया अपि गतशर्वरीवाऽद्यापि क्षेत्रसिञ्चनं विधातव्यमिति विज्ञाय गुरुं गदितवन्तस्ते–यो वक्ष्यति स एव विधास्यति। नास्माकं कापि क्षतिः ॥ २७ ॥ पठ्यतेऽपि—

कार्पोर्पिनो हि पद्यो, गुरुन् पृच्छन्ति स्वार्थगाः । ज्ञामर्हानैर्न दातव्य–मुत्तरं कोविदैर्यथा ॥ १ ॥
एक वार कहने थका, हये न पदसी कोप । गुरु प्रति शिष्यें बोलिया, ते कहसी ते कोप ॥ २ ॥

सचित्तोऽपि यो दानं न यच्छेत्तर्हि तस्वन्तं नश्येत्तत्र भोजनृप–माघपुत्रयोः २७–कथा–

भोजो वक्ति कवे । मृदंगस्तुरवस्यार्थं यदाऽदाहि सा, ज्ञातं मान्यजनैः करिष्यसि यदीमारोहणं यस्मिन तम् । कृत्येवान्तगतः किमस्त्यपमतोऽर्थं वक्ष्याति स्वावरस, त्वयूमार्य मुपदेशमीश ! तव भो भो दीयते तवूगतम् ॥२८॥

एकदा श्रुतो भोजनृपो नृत्यमकारयत्तदानीं मृदंगशब्दमाकर्ण्य भोजराजो माघकविं प्राह–भोः किमसौ भनति ? ततो माघकविरपि तस्योत्तरमदानामाऽऽर्द्दिवसावधि ययाचे। ततः शास्त्राणि विलोकितानि, परं मृदंगशब्दार्थं नावबुध्यत। तदा शोकसंवि-पमानसं माघकविं निभाल्योपायतो विप्रस्वे कृच्छ्रनिदानमभाषीत् । ततस्तु माघः प्रोवाच–विप्रवर ! मृदंगशब्देन कोऽर्थः प्रति पादये । तदा स कोविदं वक्ति यत्वं मां करिष्यमारोप्य नरपतिसमिव प्रापयेस्तर्हि मृदंगशब्दार्थं मुषाळं बोधयेऽहम् । पश्चात् दत्वा गजपृष्ठमारोप्य नृपान्तिकमानिन्ये । तं द्विजं गजाऽऽरूढं विलोक्य भोजः प्राह–कोऽयं ? तदा माघो बभाण यदसौ ना सकलं मृदंग रवार्थं प्रस्थापयिष्यति । तद्वचनमुरीकृत्य भनायेनानुयुक्तो बुधोऽवादीत्–उर्वीपते ! धमधमेति ध्वनिं कुर्वाणो मृदंगो भवन्तमु परिशति–यो हि मान्यं राज्यमासाद्य गृह्णन्तु दूरमास्तां परं कपर्दिकामपि न प्रयच्छति तद्विधममृतोपममेवेति निर्भिर्द मानीहि । मामेव वीक्षस्व, कस्मैचिदिमाय जीर्णपादत्राणस्य वितापितेन नागारूढः समभवम् ॥ २८ ॥ तस्यैतत्फलम्—

उपानहौ मया दत्ते, जीर्णे कर्णविवर्जिते । तत्पुण्येन गजारूढ-स्तद्गतं यन्न दीयते ॥ १ ॥

अथ मायाविषु मायिभिर्भवितव्यं तत्र २८-कथा—

अथ मायाविषु मायिभिर्भवितव्यं तत्र २८–कथा—

पर्षद्यन्यकविः करोत्यभिनवं भोजस्य काव्यं तदा, श्रुत्वाद्युश्च पुरातनं कविजना भूयोऽपि किं तेऽपठन् ।

राज्ञा तैश्च तिरस्कृतः प्रतिदिनं वादोऽभवच्चैकदा, कृत्वा वेधयुतं स्थिता विमनसो लक्षं च लात्वा गतः॥२९॥

कदाचिद् भोजराजस्य परिपदि कोऽपि नव्यः कोविदः समाययौ । स प्रत्यहं भोजराजं नृपं श्लोकैरुपश्लोक्याऽऽशीर्वचोभिरे-

दिधत् । परं तन्निर्मितपद्यानि कल्मषधिया संसदि निषण्णाः कालिदासादयः कवयः प्रतिघस्रं प्रत्याख्याय क्षिपन्ति स्म । अथ

च महीपतिमुक्तवन्तः—राजन् ! कवेरस्य कृतिः पूर्वकविकल्पितैव, एतत्काव्यं त्वस्माभिरपि प्रागेव स्मृतिविषयतां नीतम् । तदा

धाराधिपेन भोजेन पृष्टास्ते श्रुतधराः कालिदासादयः कवयः कण्ठतः समुदाजह्रुः । तदानीं नृपः सुकविमवमत्य बहिश्चकार,

एवं नित्यं वाक्कलहः प्रावर्तत । ततः पण्डितोऽपि स्वापमानेनाऽन्तर्दग्धो वेधयुक्तं काव्यं चक्रे । स्वकाव्योच्चारणेऽक्षमांस्तान् कालि-

दासादिकवीन् क्षीणप्रभान् कृत्वा नृपतिसकाशाल्लक्षं द्रव्यं जग्राह ॥ २९ ॥ तत्कवेः सैषा कविता—

भोजा! त्व राजराजः क्षितिपातितिलको धार्मिकः सत्यवादी, पित्रा ते या गृहीता नवनवतियुता हेमकोट्यो मदीयाः।

त्वं ता देहि त्वदीयैः सकलबुधजनैर्ज्ञायते सत्यमेतत्, नो जानन्ति त्वदीयाः सकलबुधजना देहि लक्षं तथापि॥१॥

तदर्थः—भो भोजनृपते ! त्वं राज्ञां मध्ये स्थासक इव, धर्मिष्ठः सत्यवक्ता चाथ निजान्वयस्य सुषमाकरोऽसि, परं तव तातेन

या मे नरकोट्यो दीनारा गृहीतास्तास्त्वं प्रयच्छ । तदुक्तं वे परिषज्ज्ञा श्रेष्ठिनो विदन्ति, यदि चेमां वार्तां तव विश्वासो नो जायते, तथापि सर्वं द्रव्यं देहि । अपमर्णाभिसंधि—यदि चार्यं पुराणः सोऽभूस्तर्हि नवनवतिकोटिसौवर्णान् देहि । ऐतानि- च स्यायपापि सर्वं देहि ॥ १ ॥

अथाऽत्र भवेऽदत्तमृणं परभवेऽपि दानं विना न मुच्यते तत्र २९–दृष्टान्तः—

भोजर्णं हि विप्राय पारमार्थिकं तैस्पालये च स्थितो, वृत्तान्तं प्रतिकर्ण्य स स्वनगुहोर्दृष्ट्वा प्रभातेऽखिलम् । गत्वा भोजगृहं समर्प्य सकलं भाण्डारिकानां धनं, तान्प्रोचे तदृणं क्षमोऽन्यमाधिकं दातुं न गेहे गतः ॥१०॥

कश्चिदर्थमचिन्तयामास, यदस्मिन्भवे दातुं शक्तो वा परभवेऽर्थं प्रदेयं च न भविष्यतीति मत्वा तेन भोजभूपालमुपेत्या मिहितं, यदहमद्य भवने तुभ्यं सकलीदे सर्वराजधनाप्स्ये । यदि नियोगमेतेवं कृत्वा समर्पयामि, इत्युक्त्वा सेवां विन्यस्य राज- कोपागारिकेभ्यो सार्धं विपमादाय यामिन्यां वेठिकागारे सुप्तः । तत्र निशीथे वेठिकवलीवर्दौ मिथः सम्भाषेताम् । तयोरेकस्तदे- यद्स्वामिः पूर्वभवे गृहीतविसमप्याधिकं पणकं देयमस्ति । तदहं यवसो भ्रमीः कृत्वा मुक्त्वा विमोक्ष्ये, परलोके च सुखं प्राप्स्ये । तदेतापर ऊचे–धन्योऽसि त्वम्, मया तु वेठिकस्यापापि ऽन्यमुद्रा प्रदेयाः सन्ति । अथ च राजा भोजो मे पूर्वजन्मनोऽधमर्णः । निश्चित एव वणिक् प्रगे भोजराजान्तिकं गत्वा भवेत् । यथा घावमुकपेन साकमस्य वेठिकवृषभस्य प्रतियुद्धं भवेत् । यदि नृपो ऽपेयर्हि तयास्मै उयरूप्यकाणि देयानि । एवं सम्यं कृत्वा गजमुकपेन सह मां प्रतियोधयेत्तर्हि जित्वा तं वेठिकस्य राजवान् ऋणपाश्मुक्तो भूत्वा प्रेत्य चेव धर्ममाजनो भवामि । इमां वार्तां भुत्वा स वणिक् प्रभाते प्रभुम्य पणकाधमर्णस्थानकृतो गवितमुदन्तं

यथातथमपश्यत् । तदानीं मनसि विचारयामास–प्राप्ते जनने गृहीतं स्वं देयमेवेति मतं सम्यग् निर्णीय मनसि निकषा भोजनृपं प्राप्तो रात्रिवृत्तमामूलतः समचकथत् । अथ चान्यजन्मनि त्वदृणेनाऽऽनृण्योपायं नाऽवलोकयामि । तस्मात्त्वमर्थं प्रत्याहर, अहं तु भृतिकर्मणा स्वजठरं पूरयिष्यामि । एवं निवेद्य समाहृतं स्वं कोषाध्यक्षाय ददौ । पुनश्च करिमुख्येन सह ककुद्मन्तं योधयित्वा तैलिकऋणादनृणं चकार ॥ ३० ॥ उक्तं च दोहा—

इह भव देणुं दोहिलुं, परभव वली विशेष । बलद कथाने सांभली, तजियें ऋणो अशेष ॥ १ ॥

गाथा-दासत्तं देइ ऋणं, अचिरा मरणं पुणो वि संपण्णे । सव्वस्स दाह मग्गी, दिंति कसाया भवमणंतं ॥२॥

अथ पांशुला जीवदानादपि स्वीया नैव भवति तत्र ३०–दृष्टान्तः–

प्रीत्या तेऽपि सह त्वयाऽद्य निधने धक्ष्यामि संकेतकृत्, तत्सर्वं रचितं सुरैर्यदि तदाऽर्द्धायुश्च दत्तं स्त्रियै ।
मुक्त्वा सापि तमन्यपत्तनगता तस्मिन् पुरेऽसौ गत–स्तद्भार्या मिलिता तदा च कुटिला स्वार्थे विनाऽनर्थकृत् ॥३१॥

कश्चिन्मनुजः प्रेम्णा निजजायया सार्धं मिथो भाषमाणः समयमकार्षीत् । यत्तव निधनं मत्तः पूर्वं चेत् ज्वलने त्वामहमनुसरिष्यामि । तत्पश्चाद् भार्ययाऽप्यभाणि–यदहमपि त्वद्दते वह्नावात्मानं होष्यामि, इत्थं परस्परं निश्चिक्याते । तदखिलमुदन्तजातं कश्चिद्देवः समश्रुत, ततः स देवः स्त्रियं गतासुमकरोत् । तदानीं स पुरुषः समित्समिद्धे ज्वलने प्राणान् होतुमुद्यतः, तस्मिन्नेव क्षणे देवः प्रभूतं वर्षित्वा वह्निं निरवाप्सीत् । तदनन्तरमक्षतस्य पुरुषस्य स्त्रिया आयुषोऽर्द्धभागं ददौ । अथ तत्पत्नी स्वभर्तारं विसृज्य पारेसमुद्रं विषयान्तरं जगाम । पुरुषोऽपि देशाद्देशं परिभ्रमन् तस्मिन्नेव नगरे निजभार्यां दैवात्प्राप । तदानीं व्रीडयाऽधोमुखी

चयन, यदा परित्यक्य स्वामिनं पलायाञ्चक्रे । तत्र स्त्रीचरित्रं प्रकटयन्ती स्वमासोऽपि परिच्छिद्य च पूत्कृते—पश्यं नरो मम सतीत्वं भ्रंशयति, तमिशम्य राजपुरुषास्तं निगडे बध्वा शूलमारोहयामासुः। एवं पुंश्चल्या तया स्वार्थमन्तरेणाऽप्यहितमकारि ।२१। उक्तमपि—

नहु करिये उपकार मी, योग न माने जेह । अरघुं दीघुं आवखुं, तेनी पई न तेह ॥ १ ॥

अथ यच्चिन्तितं तल्लाटफलके नूनं तदाप्तिर्भवेत्तत्र ११—कथा—

दारिद्र्यपत्नान् सदाऽस्ति भगिनी सोऽर्चितयन्मेऽस्ति हि, मिष्टान्नेच्छिकया स्वसुर्गृहगतो भ्रातुश्च दर्पान्विता । शुक्त्यर्थं पतिता गृहेऽपि चपला स्यास्यां तदा शुष्यति, दृष्ट्वा स चलिके करं वदति तां रात्रौ गता येऽप्रत ॥२२॥

कश्चित् दुर्गतोऽहर्दिवं चणकान् खादति स्म । एकदा चणकानन्नतस्तस्य छर्दिरभवत्, तदा सोऽचिन्तयत्-अहो ! कष्टमापन्नोऽस्मि । मिष्टान्नभक्षिपस्तया भ्रातृभिको भूत्वा भगिनीनिकेतनमभ्यगात् । तत्र भ्रातरं वीक्ष्य प्रीता सा भोजयितुं चणकान् रसवत्यां संरराध, भोजनवेलायां च भ्रातुः स्थाल्यां चणकान् परिविवेष । तान् विलोक्य विषण्णो भ्राता भाले पाणिं न्यस्य भगिनीमवादीत्—भगिन्यामेव मदागमनात् प्रागेव चणकास्त्वद्गृहमागमन्निति तर्कोऽस्त्यम् ॥२२॥ दोहा—

मैं लीघो छे महसमो, चोखे लीघी रात । पधी भागो भावियो, भगिनी ! थोडा लात ॥ १ ॥

देश तजी परदेश भमे, घरे घणी मन आस । सरज्यो ते नर पामियें, चपला पखिया पास ॥ २ ॥

यः पापं विधाय पश्चात्तापं कुर्यात्स सुखी स्यादन्यथा दुःखी तत्र राजसौधे भ्रजतोर्मामीणयोः १२—कथा—

वक्त्येकः किमु? मारितोऽपरनरो भीत्याऽऽशु मां रक्षतु, गत्वाग्रे यदि गम्यतां त्वरगतेर्मुक्त' सुखी सोऽभवत्॥३२॥
हर्म्यारोहणवारितं नृपतिना भृत्यः कथं कार्यतां?, वामं गच्छति मुच्यतामिह गतौ ग्राम्यौ तदाऽऽक्रोशितौ।

केनाऽपि भूभृता वाटिकाया मध्ये सौधः कारितः स्वनियोज्यांश्च समादिदेश—यत्कोऽप्यस्मिन्भवने न प्रविशेत्। तदा द्वाःस्थैः पृष्टम्—अजानन् कश्चित्प्रविशेत्, किमु तस्य विधेयं? तदानीं नृपोऽब्रवीत् सोऽपि हन्तव्य एव न तु मोच्यः। तन्निशम्य दौवारकाः सप्रश्रयं निवेदयामासुः—राजन्! कठोरोऽयं दण्डः। तदनु नृपः समचकथत्—यदि प्रवेशकः प्रतीपपाद एव व्रजेत्तर्हि स हेयः। एकदा प्रस्तावे द्वौ ग्राम्यजनौ विस्मृत्य तत्राऽऽजग्मतुः। तदानीं राजपुरुषैर्निगृहीतयोस्तयोरेको वाचाटो जीवनाशं नष्टोऽपरो भयभ्रान्तो मां त्रायध्वमित्यभाषत। अथ च प्रतीपगमनान्नृपानुचरैर्विसृष्टः स्वबान्धवेषु प्राप्तः सुखमुवास॥३३॥ उक्तञ्चापि—

पापं कृत्वा पुनः पश्चात्, यो निन्दति नरोत्तमः। स सुखी जायते लोके, यथैको हर्म्यवीक्षकः॥ १॥

अविचार्य मन्दधिषणे विश्वासवाक् न देया तत्र ३२—कथानकम्—

भूपाऽऽभीरसुते सदाभिरमतो रोदित्यभीरांगजा, वक्त्याः! रोदिषि किं? भवद्विरहतः सत्यं धवैको हि नौ।
याम्यागच्छसि विट्समं निशि सखे मार्गे मिलित्वा गता, श्रुत्वार्याश्चलहेतुकां वरमतो ज्ञात्वा गता स्वालये॥३४॥

एका राजकन्याऽपराऽऽभीरकन्या चोभे सख्यावास्ताम्, मिथः संगते चिक्रीडतुः। एकदा बाष्पं विमुंचती साऽऽभीरबाला नृपकन्यया पृष्टा—किन्निमित्तं रोदिषि? अथैनां सा बभाण—राजसद्मनि परिणीता बहिर्निष्क्रमितुमक्षमा सती त्वं मया सह नोपस्थास्यसे, तत्त्वद्वियोगपीडिता रोदिमि। तदानीं राजदुहिताऽपि तस्यै यो हि त्वद्भर्ता ममापि स एव, इत्थं वचनं ददौ। जात्वाभीर-

बालिका केनाऽपि युवकेन साकं गन्तुं प्रवृत्ता, तस्यापि तथा स्त्रीस्पृहाऽभवत्—स्वमनेन सत्रा व्रज। पश्चात्सा प्रथमोद्विवचनवशात् पिता तेन सह नगराभिमुखं क्रान्तम्। अग्रे गच्छतां तेषां नटीपदप्राप्तकः समनुप्राप्तस्तदाऽस्याऽग्रपृष्टान्तं निशम्य सुजाना नृपकुमारी स्वनिकेतनाय निववृते ॥२४॥

दोहा—कालुं घोकुं मुख करी, रत्तड़ा पयो भशास। तें फल दीधे कवण गुण!, जो फल दिये पलाश ॥ १ ॥
सुरतरु आणी सेविआ, तूं तो निर्गुण पलाश। जब तें मुख कालो कियो, तब मैं छोड़ी आश ॥ २ ॥

अथ महतामनुकारी नीचोऽवसीदति तत्र २५—दृष्टान्तः—

काननेऽग्निभयात् ह्रदे पतति ये सिंहादिजन्तुव्रजा, शान्ते वह्निभये हरिर्वदति तान् पुच्छं गृहाणाऽऽशु मे। ते गृह्णन्ति तदा हताः स्थलचरास्तच्चारितं फेरुणा, पश्चात्तेन कृतं तथापि न हताः पुच्छं तदा त्रोटितम् ॥२५॥

कस्मिंश्चिद् गहनमध्ये वह्निभयात्त्रस्ताः केसरिप्रमुखाः प्राणिनोऽगाधे सरसि निपेतुः। पश्चाद्वाग्नौ शान्ते कण्ठीरवो मृगादीन् व्याजहार—भोः सत्त्वाः! यूयं मम वालधिं गृह्णीत, सर्वानप्यहं तारयिष्यामि। तदाकर्ण्य सर्वेऽपि तल्लाङ्गूलमगृह्णन् मृगेन्द्र भास्तुत्याखिलान् बहिश्चकार। सा वार्ता केनाऽपि क्रोष्ट्रा हरि निरीक्ष्य, पुनः कतिपयैरेवाहोभिर्दावाग्निसामीप्ये भ्रष्टान् जन्तून् सिंह इव जम्बुकोऽवदत्—मे पुच्छमारुह्य, युष्मान्निष्कासयिष्येऽहं। अथ बलमाधाय गाबद्दुस्तवति, तावदेवास्य पुच्छं भग्नम्, अन्ते पञ्च सर्वे मृताः। यतोऽधमो जनः स्वाधिकवीर्यमनुकुर्वन् क्लिश्नास्येव ॥ २५ ॥ तथा चोक्तम्—

आत्मवीर्यं न जानाति, दृष्ट्वा दृष्ट्वा करोति यः । स दुःखी स्याद्यथा फेरु-स्त्रुट्यत्पुच्छो ह्यधोऽपतत् ॥ १ ॥

अथ महतां छायापि सत्फलदा तत्राऽजापालस्य ३५-सूपनयः—

च्युत्वाऽधो न्यपतन्फलानि स ततो दृष्ट्वा तदाचिंतयद्, गोपो मूर्ध्नि हि खेगमस्य पतिता छाया वरा बुद्धिदा ।
श्लोकस्तेन कृतश्च पादरहितश्छाया गता नो पदं, तादृक् तेन हि पूरितं निजधिया डुक्कं च डुक्कं पदम् ॥ ३६ ॥

एकस्मिन्नन्धुमध्ये जंबुफलानि पतंति स्म, तानि दृष्ट्वा कश्चिच्छागपालो व्यचिन्तयत्—यदिमानि फलानि खाद्यानि । तस्मिन्नवसरेऽजापालस्य भालोपरि सरस्वतीविमानस्य छाया पपात । तदानीमजापालस्य बुद्धिरुत्पन्ना, तया श्लोकस्य पादत्रयं तेन रचितं पर तत्क्षण एवाऽपगता विमानच्छाया । ततः सहजधिया तेन चतुर्थश्चरण इत्थं निर्मितस्तन्निर्मितं पद्यमीदृक्—॥ ३६ ॥

जम्बूफलानि पक्वानि, पतन्ति विमले जले । पतितान्येव दृश्यन्ते, चतुर्थन्तु डुबक् डुबक् ॥ १ ॥
छायापि फलदा पुंसां, महतान्तु विशेषतः । विमानच्छायया वाण्या, गोपोऽपि पटुतां गतः ॥ २ ॥

अथ सद्विद्या सर्वेषां विस्मयकरी भवति तत्र ३६-कथा—

कोप्यागत्य विशारदो वदति मे विद्यां नृपं पश्य भोः !, स्त्रीं मुक्त्वेशगृहे गतो हि गगने मृत्वाऽपतत्तत्समम् ।
सा दग्धा पुनरागतो मम वधूं त्वं देहि वार्ताऽपि सः, कूटं मा वद चानयामि हि वरं लात्वा गतो विस्मितः ॥३७॥

कश्चिद् विप्रः स्वस्त्रियमादाय कस्याऽपि भूभृतो भवनमाससाद । अब्रवीच्च—मम विद्यावैभवं पश्य, नृपोऽपि वरं प्रदर्शयेत्यु-

पितान् । तदनन्तरमन्तःपुरे निजभार्यां विसृज्य गगने च देवासुरसंग्रामो जायते, तत्राहं प्रयामीत्युक्त्वा गतः । क्षणे हतः कर चरणापनयनैः सहितो भुवि न्यपतत् । तं विलोक्य तत्स्त्रीमन्त्रिणी समिद्धेऽग्नौ तेन सहैवात्मानं जुहाव । तत्कालमेव सोऽपि पुरुष ऐन्द्रजालिकवत् नृपसमीपमागत्य जगाद्—भोः पृथ्वीश ! प्रयच्छ मे दारान् । नरपतिरपि यायातथ्येन सर्ववृत्तान्तजातमामूल-चूलतो न्यवेदयत् । परं सोऽपि तदुदितं मृषा मन्वानो जगाद—मम भार्या त्वयैव रक्षितास्ति । अथैनं नृपोऽभ्यभाषत—मह्यमेव तव पत्नी चेत्समानय, इत्युक्तः सोऽपि निजपत्नीमानयत् । तद्विद्यायाः प्रभावं विलोक्य सदसि निषण्णाः सर्वेऽपि विस्मयमापुः पुनः प्रभूतद्रव्यप्रदानेन तं प्रसादयामासुः ॥ २७ ॥ कथितमपि—

विप्रेण दर्शिता विद्या, विस्मयः सदसि स्थितः । तमीक्ष्य सुभटाः सर्वे, तदा तस्मै धनं ददुः ॥ १ ॥

अथ कपटेन कुलटा भूतिमाप्नोति तत्र २७-कथा—

नो पुष्णाति पतिं तमाह कुलटा मेऽन्ध कुरु त्वं सुर !, भुक्त्वेतो हविषा ततो हि हविषा पीनस्तदान्धोऽभवत् ।
पश्चात्सोपमुपागतो वदति स पश्यामि नो निर्भया, भुंक्तेऽन्यैः सह भोगमस्ति बलवान् युग्मं गृहीत्वा हतम् ॥२८॥

कापि कुलटा कामिनी स्वपतिं न पुष्णाति, स्वयं च सेवतीति स्वपत्येऽनुरागं नाऽभिहितवती परस्मिन्नारमत । एकदा सा यक्षमर्चयित्वा पूजावसाने तं प्रार्थितवती—भो यक्ष ! मे भर्ता चक्षुर्विकलो भवेदिति । एवमतिक्रामति काले तद्भर्तोऽपि तां वार्तां श्रुतवान्, तदा कपटेन यक्षप्रतिमायाः पृष्ठदेशे निलीय स्थितः । अथ तस्त्री यक्षप्रतिमासमीपमागत्य याचत्यार्थयते—भो यक्ष ! मम पतिं नेत्रहीनं कुरु तावत्पृष्ठभागे समुपविष्टः पुरुषः प्राह—हे अबले ! यदि त्वमन्वहं स्वभर्तारं स्निग्धमिष्टान् घृतपूरानपूपादींश्च

वनवान्धोनिर्मितान् पदार्थानाशयिष्यसि, तर्ह्यविलम्बेनैव सोऽन्धः संपत्स्यते । तन्निशम्य सा तथैवोपाचरत् । तस्याः प्राणेशोऽपि
हतलोचन इव प्रणिगदति–अये सुन्दरि ! मे दृष्टौ किमपि नाऽऽपतति, किमहमधुना करवाणि, देहि मेऽवलम्बनमिति ।
तदानीं सा पुंश्चली निर्विशंका विटेन सह रममाणा रतिजनितसुखमन्वभूत् । तस्या हृदि शंकागन्धोऽपि नाऽऽस्पदं चकार । यदा
स सद्यो निर्मिताज्यबहुलभोज्यद्रव्यैः पिनद्धगात्रः समजायत, तदा व्यभिचाररतं युगलं संनह्य यमसदनातिथिमकरोत् ॥ ३८ ॥
उक्तञ्च–कथं हससि भो हंस !, नाहं दर्दुरवाहनः । कालक्षेपं करिष्यामि, घृतान्धो ब्राह्मणो यथा ॥ १ ॥

अथ गुरुः शिष्यान् परीक्ष्य निजास्पदे स्थापयेत्तत्र ३८-कथा—

शिष्यान् वक्ति गुरुस्तदाम्रफलमिच्छाम्यानय त्वं पृथक्, पारीक्षाय निवेदिताः प्रथमकोऽवग् वृद्धता ते गुरो ! ।
अन्यो गच्छति शब्दितस्त्वयलघुर्गत्वा विधिं पृच्छति, त्रैविध्यं ज्ञविनीतकं हि गुरुणा ज्ञात्वाऽर्पितं सत्पदम् ॥ ३९
अथ कोऽपि गुरुः स्वपदे कमपि शिष्यं नियोजयितुं प्रशस्यशिष्यपरीक्षणाय प्रथमं तेषु वयसा ज्येष्ठं प्रत्याह–यत्त्वमस्मभ्यमाम्रफल-
माहृत्य प्रयच्छ तदा सोऽवक्–हे गुरो ! ते मतिः क्व विलीय गता, यद् वार्धक्येऽपि रसालफलमुपभोक्तुं मनः प्रसरति । पश्चाद-
परं शिष्यं प्रत्याह–भोस्त्वमाम्रफलमानय । अथ सोऽप्यानेतुं प्रस्थितः, पश्चात्तमाजुहाव । पुनरित्थमेव तृतीयं कनीयांसं प्रत्यवदत् ।
स त्वभिवाद्य गुरुं पप्रच्छ–कृपालो गुरो ! त्रैविध्यमाम्राणां कतममहमानयानि ? । इत्थं तस्य वाक्पाटवं प्रसमीक्ष्य ज्ञानवन्तं क्रिया-
वन्तं विनयान्वितञ्च तं शिष्यं स्वस्थाने स्वपट्टे वा संन्यवेशयत् ॥ ३९ ॥ तथा चोक्तम्––
परीक्षा सर्वसाधूनां, शिष्याणां च विशेषतः । कर्तव्या सूरिणा नित्यं, त्रयाणां हि कृता यथा ॥ १ ॥

भद्रजनः सर्वत्र भद्रतामेव लभते, तत्र ४०-कथा—

यज्ञे जग्घिकरीं निरीक्ष्य हरिकेश्यन्नं तदा याचते, तस्मै ते न ददुः सकृद् विषधरं दृष्ट्वा हतस्तैर्नरैः ।
द्वाःस्थान्ते हि तथाऽवदन्त्व विषकैषाऽस्तोऽपि नो मार्यतां,ज्ञात्वा स्वावगुणं ललौ व्रतवरं प्रोक्ता नु तेनाऽऽर्यका॥४१॥

कस्मिंश्चिदध्वरे बहवो भूमिदेवा निमन्त्रिता भुञ्जते स्म । तत्र हरिकेशीनामा श्वपचो भक्तं ययाचे । परं ते तस्मै न ददुः, प्रत्युत चुक्रुशुस्तदनन्तर एव बिलादेको भुजंगो निरियाय । तं वीक्ष्य विप्रा जघ्नुर्हरिकेशी चाण्डालोऽपि तदपश्यत् । अथो कतिपयैरेव क्षणैस्तत्रैका गोधा निस्ससार तां दृष्ट्वा हरिकेशी हन्तुं प्रधावितः । तदा तत्रोपविष्टा भूसुरा व्याजह्रुः—अङ्ग ! अवध्यैषा निर्विषत्वात्तदा स स्वयमेव स्वापराधं परिज्ञाय जातिस्मरणोदयाच्चारित्रव्रतं जग्राह ॥ ४१ ॥ अथ च गाथामुच्चार्योपदिदेश ।
सैषा गाथा—भद्देण होइ सव्वं, भद्दं पावेइ सव्वओ भद्दं । हणिओ कण्हो सप्पो, भेरंडो तत्थ मुंच दिट्ठो ॥१॥

सत्प्राणिनो वस्तुवैलक्षण्यं निरीक्ष्य विरज्यन्ते तत्र ४१—उदाहरणम्—

दृष्ट्वेशोऽप्यति सुन्दरं च वृषभं सोऽटाट्यते चैकदा, मार्गे सत्करकण्डुराह निजकान् कस्याऽयमुक्षा तदा ।
प्रोचुस्ते तव भोः! कामिष्टवृषभं श्रुत्वेति दीनोऽपि सन्, वैराग्यं हि विधाय राज्यमखिलं त्यक्त्वा मुनीशोऽभवत्॥४२

कस्यचित्करकंडुराजस्य कमनीय उक्षाऽऽसीत्। बहुकालानन्तरमेकस्मिन् दिवसे मार्गमध्य उच्चैराक्रन्दन्तं तं दृष्ट्वा स मनुजानपृच्छत्—कस्याऽयं बलीवर्द इति? कश्चिदप्येनं न बध्नाति ? तत्र स्थितः कश्चिन्मानवो वक्ति—राजन्! भवतां निकाममभिमत एष वृषः ।

मरानेव न त्रायते व्था कोऽन्यः परिपालयेत् ? श्रुत्वेत्थं प्रभृति राज्ञश्चित्ते निर्वेदवैराग्यमुत्पादि । तेन प्रभूतं राज्यं पुत्रकलत्रादिकं च परिहाय दीक्षा जगृहे । श्वान्तवन्तान्तरवर्तिवीचिवि चलाः श्रम इव क्षणभंगुरं वस्तुसार्थं परिहाय, संसाराऽसारतां पोपार्तिमिर्दीकृत्य, मोहं तत्तु पापीयानिति हृदि संप्रधार्य मुनिसत्तमः समजायत ॥ ४१ ॥ कथिता गाथापि—

सेय सुजायं सुविभत्तसिंगं, जो पासिया वसहं गोट्ठमज्झे ।
रिद्धिं अरिद्धिं समुपेहियाणं, कलिंगराया विसमिक्ख धम्मं ॥ १ ॥

एकाकी सदा सुखी भवति, तत्र नमे राज्ञः ४२—कथा—

नम्यंगे तुदति ज्वरोऽपि ललना घर्षन्ति तान्चन्दनं, याम्यं मो वलयोऽत्रयं सहति स त्यक्त्वा समं रक्षितम् ।
पृष्टस्तेन कथं रवो भवति नो ? ताः प्रोचुरेकैककः, चिन्तयो बहुता सुखं मम तदेकाद्यपास्ति जातो मुनिः ॥४३॥

एकदा नमिनृपाङ्गे दाहज्वरः समुत्पन्नस्तदा सर्वाः स्त्रियश्चन्दनं निघृष्य २ लेपं चक्रुः, परं स शान्तिं न प्राप, चन्दनं निघर्षन्त्यः मान्त्यास्ता वल्यानां खिखिरवेन दुर्मनायमानं तं ज्ञापयितुं मंगलप्रयोजनमेकैकं वलयं करे धृत्वान्यः शेषान् सर्वान् निष्कृः । ततो रवस्ये शान्ते राजाऽप्राक्षीच्छब्दः कस्मान्न जायते ? तदा योषितः प्रोचुः मांगलिकं एकैको वलयः पाणौ न्यस्तोऽतोऽत्र न ध्वनिरिति । समुदन्तं निशम्य नृपश्चिन्तयामास—यत्रैकाकिनो महत्सुखं जायते, तावन्जनवर्गो नास्ति । यदि ज्वरः शाम्येत्तर्हि दीक्षितो भूत्वा केवलो विचरामि । एवं धर्ममनुध्यायतस्तस्य तापे शान्ते तत्कालमेव प्रव्रज्यां गृहीत्वा स वने पवने च विचरन् मुक्तोऽभवत् ॥४३॥

गाथा-वलयाण सद्दयं सोच्चा, एगस्स य असद्दयं । वलयाणं नमी राया, निक्खंतो मिहिलाहिवो ।। १ ।।

दोहा-चन्दन घसतां चूड़िनो, श्रवण शब्द न सुहाय। एक रखावी चिंतव्युं, बहु मलियां दुख थाय ।।२।।

राजऋद्धि सब परिहरी, लीधो संयम भार । जब इन्द्रे परिखा करी, न चल्यो नमी लगार ।।३।।

अथाऽविमृश्यैव परस्यानुकृतौ लब्धस्याऽपि प्रणाशः, तत्र ४३-कथा-

छिन्दन्निःस्वनरस्तरुं किल वने देवेन तद्वारितो-ऽन्नार्थी मार्गयतीह देह्युडदजान् दत्तं वरं गच्छ भोः ! ।
गेहेऽदन्ति जना विलोक्य धनिना पृष्टं कुतस्तानयो, प्रोचे तत्र गतः सितागृहघृतं तस्यास्तु मुक्तः स तम्।४४

कश्चिदधनः कृशश्च पुरुषोऽरण्ये काष्ठमाहर्तुं गतस्तत्र तरुवरं चिच्छेद । तदुपरि काचिदधिष्ठातृदेवताऽन्तर्हिताऽऽसीत्तयोक्तम्-भोः ! मा छिन्धि विटपमेनम् । तदा निःस्वपुरुषोऽवदत्-बुभुक्षितोऽस्मि, प्रयच्छ मेऽभ्यवहर्तुमिति। देव उवाच-भोः ! वरं वृणिष्व, यत्कामयसे तत्ते मनोरथं पूरयिष्ये, ततः स उडदजान् ययाचे । देवेनापि तथाऽस्त्वित्युक्तम्, पश्चात्स गृहमागत्य माषजान् खादितुं प्रारभत । तत्परिवारमपि माषजान् प्रत्यहं भक्षन्तं दृष्ट्वा प्रातिवेश्मिको व्यवहारी पप्रच्छ-यत्त्वं माषजान् सर्वदा कुत आनीय खादसि ? स वराकोऽब्रवीत्-वने वृक्षं छिन्दतो ममोपरि देवस्तुतोष, तत्प्रसादेन प्रतिघस्रं माषजानद्मि । तदाकर्ण्य प्रातिवेश्मिकः कुठार-मादाय वने गत्वा पादपं छेत्तुमुद्यतः । तदानीं देवो हस्तं तथा जग्राह येन कथमपि मोचयितुं न शशाक । पश्चाद् गृहे संभृतं घृतं प्रतिवेश्मिने देयमिति प्रतिश्राव्य गृहाय मुमोच, । गृहे समुत्पन्ने घृते शर्करां निपात्य भुंक्ष्वेति स्त्रिया प्रतिबोधितोऽपि देववाण्या बद्धोऽस्तोऽवशो वराको गृहस्थितमपि शर्कराघृतं भक्षितुमसमर्थः ग्रन्थिस्थितमपि जहाविति जानीहि ।।४४।। यतः-

दोहा–डोकल खातां देखिने, हॉस हुई मनमांय । लेइ कुल्हाड़ो धनगयो, सुर थंभी तस काय ॥ १ ॥
वनिता पतिसुं वीनवे, धणी तें कथपथ कीय । डोकल तो पाम्या नहीं, घरना चूका वीय ॥२॥

सत्पुरुषो हीनगुणं वस्तु पुरो न न्यसेत्तत्र ४४–कथा—

दृष्ट्वाऽनीकममात्यमाह नृपतिः कस्यास्ति शौर्यं बले ? शास्त्येनस्य तदा मृगाधिपपदे श्वाऽऽरोपितः स्वामिना ।
यदा कृत्रिमका सदा वलमुखे संस्थापितः श्वा शुन–स्तत्रागात् भयतीति पृष्ठचरणाभ्यां सोऽपि नष्टोऽधमः॥४५॥

कस्यापि प्रभूतो विषये शत्रुसैन्यमागत्य देशं लुण्ठितुमागात् । तदाकर्ण्य श्रुत्वा नृपो मंत्रिणमपृच्छत्—हे मंत्रिन् ! सैन्ये कस्याधिकं बलं भवति ? तदा सचिवेनोक्तम्–सेनायां करिवरं मुख्यम् । नृपः प्रोवाच–सिंहमेकं कृत्रिमं कृत्वा सैन्यसमग्रं स्थापय । इत्येवम्श्रुत्वा मंत्रिणा कश्चिदेकः सारमेयः कृत्रिमकेसरादिना सिंहीकृत्य भयंकराकृतिः सेनायाः पुरः समानीतः । स शत्रुनृपस्य बलमुखे नूतनमत्तघनसमीलां गजघटां प्रेक्ष्य भयन् पराङ्मुखः सन् पलायांचक्रे । यथा २ सैन्यमभ्यागच्छति, तथा २ कुक्कुरः पृष्ठे स्थानि निदधौ । तस्मात्सदैश्वर्यो महापुरुषः कस्याप्यनुकरणं न कुर्यात् ॥ ४५ ॥ तथा चोक्तमपि—

आबद्धकृत्रिमसटा विकटास्यभक्ति–रारोप्यते मृगपतेः पदवीं यदि श्वा ।
मत्तभकुंभतटपाटनलंपटस्य, नादं करिष्यति कथं हरिणाधिपस्य ॥ १ ॥

अथ च्छिन्नार्द्धपुच्छखरीप्रहेलिकायाः ४९–कथा—

भूपः प्राह ददामि यो मम सुताप्रश्नोत्तरं दास्यति, राज्यार्धं तनयां च तस्य यदि नो शूलिं च दत्तावुभौ ।
दृष्ट्वैकेन कृता प्रहेलिकवरा मेऽर्थं कुरु त्वं प्रिये !, प्रोक्त्वा षंढखरीं विवाह्य नृपजां राज्यं च लात्वा गतः ॥४६॥

कश्चिद्राजा मनुष्यान्प्रत्युवाच–यो मम सुतायाः प्रश्नोत्तरं प्रदास्यति तस्मै राज्यार्धं स्वां दुहितरं च दास्ये । अथ च वादं कुर्वन् कश्चिदुत्तरं न प्रयच्छेत्तर्हि शूलमारोपयामीति प्रतिश्रुतम् । अनेन पणबन्धेन स पुरुषयुगलं शूलमारोपयामास । अत्रान्तरे कोऽपि राजन्यः स्वस्त्रिया द्विरागमनं कृत्वाऽऽगमत्, मध्येमार्गं च शूलमारोप्यमाणौ द्वौ पुरुषौ विलोक्य प्रहेलिकामेकां च समीक्ष्य स्वयं कुमार्याः पुरो गतो विचिन्त्य च राजपुत्रीं वक्तुं प्रचक्रमे–हे राजसुते ! तव प्रहेलिकायास्त्वर्थो षंढखरीति वर्तते । परमस्मदीयां प्रहेलिकामपि विशदीकुरुष्वेति वाक्यविन्यासेन भूपालः समबुद्धः, यदनेनास्मत्प्रहेलिका प्रतिपादितेति मत्वा स्वतनयां राज्यार्द्धञ्चाऽदित । सोऽप्युभे भार्ये राज्यं च लात्वा प्रस्थितः ॥ ४६ ॥ अथेदानीं नृपदुहितृपृष्टां प्रहेलिकां प्रकटयति—

हुतो तिवारे खाजे नहीं, न हुतो तिवारे खाजे । ए हरियालीनो अर्थ कहे, तेहने कुमरी छाजे ॥ १ ॥

करी करम तो एक तेम बीजी, करी करम तो छे तेम त्रीजी ।
राणी कंकण शीतल थासे, कहक रंक पर कागडा वासे ॥ २ ॥

ऑख माहिं पांख विआई, शूली दीधुं पाणी । एहनो अर्थ बांडो गधेड़ो, तेहने कहे ते राणी ॥ ३ ॥

४

